सुन्दर्य्यब्दे चतुर्दशे। त्रयोदशाब्दीऽंशुखी सा द्वादशाब्दा च भैरवी। एकादशगुणोपेता ब्रह्मवेश्या कुलेश्वरि!! महासाध्वी समाख्याता त्रिषु लोकेषु दुर्लभा। स्वर्गे मर्त्ये च पाताले या या तिष्ठति चाङ्गना। सर्वासामपि भर्त्ता च दिव्यो वीरश्च साधकः। योगी दिव्यो यदा वीरः सर्वेषामीश्वर्भवेत्। दिव्योऽपि वीरभावेन सर्वजात्युद्भवां यजेत्। गुप्तवेश्या महावेश्या अयोध्या मथुरा प्रिये!। या या च कुलवेश्या स्याच्चदोदशा च कालिका। राजवेश्या देववेश्या द्वारका परिकीर्त्तिता। काशी च राजवेश्या स्याद् देववेश्या ब्रह्मतिका। द्वारावती ब्रह्मवेश्या गुप्तेता मोक्षदायिकाः। कुलीना भगवती साक्षात् काली तारा सरस्वती। कुलीना भैरवी साक्षात् कुलीना छिन्नमस्तका। कुलीना सुन्दरी देवि! कुलीना महिषमर्दिनी। कुलीना भुवना बाला कुलीना वगलामुखी। धूमावती कुलीना च मातङ्गी कुलनायिका!। कुलीना चान्नपूर्णा च कुलीना त्वरिता तथा। पतिव्रता कुलीना च सती साध्वी महोदया। कुलीना मध्यमस्थाणां विहिता नात्र संशयः। कुलजा देवकन्या च कुलीना योगिनीगणा। रम्भोर्वशी रती रामा कुलीना च तिलोत्तमा। एताः सर्वाः पृथग्वेश्या विहरन्ति कुलात्मजाः। कुलजा कुलवेश्या या कुलधर्म्मपरायणा। पञ्चभर्त्राश्रिता लोला कामकौतुकलालसा। कुलवर्त्मक्रमेणैव सदैव रमणोत्सुका। विदग्धवीरभावेन वीरसेवनतत्परा। विहिता स्वाधीनजाश्च पूजयेदथ वाग्यतः। ब्रह्मचारी गृहस्थोऽपि विहितान्यां न चार्चयेत्। चर्चिते विहिताहानिः स्याद्दुःखं तस्य पदे पदे। हीनजां विहितां वेश्यां मनसा च प्रपूजयेत्। तद्योगं चिन्तयेद्धीमान् शतमष्टोत्तरं जपेत्। अथ प्रणम्य देवेशि!। मधुद्रव्यं निवेदयेत्।

कामाद्वा मोहतो वापि हीनजां यदि गच्छति। रौरवं नरकं याति हीनजासङ्गमेन च। हीनजासङ्गमं देवि! मनसा न स्मरेत् कलौ। कुलकर्म्मप्रवृत्ता या सा मुक्ता नात्र संशयः। कुलजा कुलवेश्या च वीरमेकं समाश्रयेत्। सेवयेच्च पशु-भर्त्तारं कुलमार्गं प्रवेशयेत्। कुलमार्गं समाश्रित्य वीरमेकं समाश्रयेत्। कुलमार्गप्रवृत्ता च पतिहीना भवेद् यदि। कुलजा वा कुलीना वा परजन्मनि जायते। कुलधर्म्मरता शस्ता कुलधर्म्मोत्सुका तथा। पूजार्हा सा महेशानि! पतिहीना प्रपूजयेत्। लोकाचारभयेनैव पूजार्हा लज्जिता यदि। तां विहाय कुलेशानि! कुलजाञ्च प्रपूजयेत्। कुलीनादर्शनेनैव सर्व्वपापक्षयो भवेत्। गङ्गास्मरणमात्रेण यथा पापक्षयो भवेत्। कुलजा च कुलीना या मन्त्रतन्त्रफलप्रदा। महावेश्या भवेत् सैव सर्व्ववेश्याफलप्रदा। यासाञ्च सिद्धविद्यानां प्रशस्ता वा कुलार्च्चने। सैव शक्तिविशेषेण सर्व्ववेश्या प्रकीर्त्तिता॥

विद्याविशेषे शक्तिविशेष उक्तस्त्रयोदशपटले यथा॥ श्यामाविद्या न सिध्येत ब्राह्मणीगमनं विना। छिन्नमस्ता न सिध्येत कापालीगमनं विना। सिद्धविद्या न सिध्येत भूमीन्द्रतनयां विना। रजक्यास्तु गृहे देवि! भैरवी च सुसिध्यति। साध्या सा विहिता प्रोक्ता विहिता द्रुतसिद्धिदा। साधयेद्रजनीं सर्व्वां ब्राह्मणीं यावनीं विना। सर्व्वारम्भान् परित्यज्य साधयेद्द्विजजां द्विजः। राजराजेश्वरी साक्षाद् द्विजजारूपधारिणी। द्विजजातोषणादेव द्रुतं सिध्यति सुन्दरी। श्रेष्ठवर्णोद्भवां रम्यां साधने नैव साधयेत्। साधने सिद्धिहानिः स्याद्रौरवं नरकं व्रजेत्॥

अथ प्रयोगः॥ गतयामायां रात्रौ स्वशक्तिं परशक्तिं वा तुलिकोपरि स्ववामभागे संस्थाप्य तस्या अङ्गे स्वकल्पोक्त-

न्यासान् विधाय भद्रीचितायां शुद्धिं कुर्य्यात् । यथा ॥ ऐं क्लीं सौः त्रिपुरायै इमां स्वशक्तिं पवित्रीकुरु मम शक्तिं कुरु स्वाहा । इत्यनेन जलविन्दुभिरभिषिच्य तस्या वामकर्णे अभेदबुद्ध्या मायाबीजं वदेत् ॥ ततो योनिं ध्यायेद्यथा । अतिसुललितगात्रां हास्यवक्त्रां त्रिनेत्रां जितजलदसुकान्तिं पट्टवस्त्रप्रकाशाम् । अभयवरकराढ्यां रत्नभूषातिभव्यां सुरतरुतलपीठे रत्नसिंहासनस्थाम् । हरिहरविधिवन्द्यां बुद्धिशुद्धिस्वरूपां मदनरससमाक्तां कामिनां कामदात्रीम् । निखिलजनविलासोद्दामरूपां भवानीं कलिकलुषनिहन्त्रीं योनिरूपां भजामि ॥ इति योनिं ध्यात्वा सम्पूज्य योन्युपरि ह्सौः इति योनिमन्त्रमष्टोत्तरशतं जप्त्वा समर्प्य स्तवकवचादिकं पठेद्यथा ॥ श्रीदेव्युवाच ॥ भगवन् ! सर्वधर्मज्ञ ! कुलशास्त्रार्थपारग ! । सर्वं मे कथितं नाथ ! न त्वेकः परमेश्वर ! । श्रीयोनेः स्तवराजं हि तथा कवचमुत्तमम् । श्रोतुमिच्छामि सर्वज्ञ ! यदि तेऽस्ति कृपा मयि । सारभूतं महादेव ! निगमान्तर्गतं स्तवं । यदि नो कथ्यते देव ! प्राणत्यागं करोम्यहम् । दिवानिशि महाभाग ! मयास्तु पतितं भवेत् । अतस्ते देवदेवेश ! कथ्यतां मे दयानिधे ! ॥ श्रीमहादेव उवाच ॥ शृणु पार्वति ! वक्ष्यामि देहत्यागं कथं कुरु । अत्यन्तगोपनीयं हि निगमे कथितं पुरा । ब्रह्मविष्णुमहादीनां न मया कथितं पुरा । अकथ्यं परमेशानि ! इदानीं किं करोमि ते । तव स्नेहेन बद्धोऽहं कथयामि तव प्रिये ।। मातर्देवि ! महाभागे ! यदि कर्णे प्रकाश्यते । शपथं कुरु मे दुर्गे ! यदि त्वं भक्तियुता । ब्रह्मा यदि चतुर्वक्त्रैः पञ्चवक्त्रैः सदाशिवः । वर्णितुं स्तवराजञ्च न शक्नोति कदाचन । सम्यग्वक्तुं न शक्नोमि संक्षेपात् कथयामि ते ॥ अथ श्रीयोनिस्तवराजस्य कुला-

मार्कण्ड ऋषिः कौलिकच्छन्दः श्रीयोनिरूपा दशविद्यात्मिका देवता सर्वसाधने विनियोगः। ओं योनिरूपे! महामाये! सर्वसम्पत्प्रदे! शुभे!। कृपया सर्वसिद्धिं मे देहि देहि जगन्मयि!॥ १॥ सर्वस्वरूपे! सर्वेशे! सर्वशक्तिसमन्विते!। कृपयेत्यादि॥ २॥ महाघोरे! महाकालि! कुलाचारप्रिये! सदा। कृपयेत्यादि॥ ३॥ घोरदंष्ट्रे! चोग्रतारे! सर्वशत्रुविनाशिनि!। कृपयेत्यादि॥ ४॥ योनिरूपे! महाविद्ये! सर्वदा मोक्षदायिनि!। कृपयेत्यादि॥ ५॥ जगद्धात्रि! महाविद्ये! जगदुद्धारकारिणि!। कृपयेत्यादि॥ ६॥ जगद्धात्रि! महामाये! योनिरूपे! सनातनि!। कृपयेत्यादि॥७॥ जय देवि! जगन्मातः! सृष्टिस्थित्यन्तकारिणि!। कृपयेत्यादि॥ ८॥ सिद्धिदात्रि! महामाये! सर्वसिद्धिप्रदायिनि!। कृपयेत्यादि॥ ९॥ महालक्ष्मि! महादेवि! महामोक्षप्रदायिनि!। कृपयेत्यादि॥ १०॥ गौरी लक्ष्मीश्च मातङ्गी दुर्गा च नवचण्डिका। वगलामुखी भुवनेशी भैरवी च तथा प्रिये!। छिन्नमस्ता च काली च योनिरूपा सनातनी। कृपयेत्यादि॥ ११॥ काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी। नायिका विप्रचित्ताख्या षष्ठ्या या नायिकाः स्मृताः। वसन्ति योनिमाश्रित्य ताभ्योऽपीह नमो नमः॥ १२॥ अणिमाद्यष्टसिद्धिश्च वसत्यस्याः समीपतः। नमस्तेऽस्तु नमस्तेऽस्तु योगमोक्षप्रदायिनि!॥ १३॥ सर्वशक्तिमयि! देवि! सर्वकामप्रकाशिनि!। हे योने! हर विघ्नं मे सर्वसिद्धिं प्रयच्छ मे॥१४॥ आधारभूते! सर्वेषां पूजकानां प्रियंवदे!। स्वर्गपातालवासिन्यै योनये च नमो नमः॥ १५॥ विष्णुसिद्धिप्रदे! देवि! विष्णुसिद्धिप्रदायिनि!। ब्रह्मसिद्धिप्रदे! देवि! रामचन्द्रस्य सिद्धिदे!। ब्रह्मादीनाञ्च सर्वेषां सिद्धिदायै नमो नमः॥ १६॥

इति ते कथितं देवि! सर्वसिद्धिप्रदायकम्। स्तोत्रं योनेर्महेशानि! प्रकाशितमिदं त्वयि!। सर्वसिद्धिप्रदं स्तोत्रं यः पठेत् कौलिकः प्रिये!। लिखित्वा पुस्तके देवि! रक्तद्रव्येण सुन्दरि!। तस्यासाध्यानि कर्म्माणि सुसिद्धानि कुलेश्वरि!। नास्ति नास्ति पुनर्नास्ति नास्त्येव भुवनत्रये। यः पठेत् प्रातरुत्थाय सार्वपत्यं लभेन्नरः। रात्रौ कान्तासमायोगे यः पठेत् साधकोत्तमः। स्तवेनानेन संस्तुत्य साधकः किं न साधयेत्। स्वलङ्कृतां स्वकान्ताञ्च लीलाहावविभूषिताम्। रक्तवस्त्रपरीधानां कृत्वा सम्पूज्य साधकः। भोजयित्वा ततो देवि! स्वयं भुञ्जीत तत्परः। मत्स्यमांसादिकान् भुक्त्वा क्रोडे कृत्वा स्वयोषितम्। रात्रौ यदि जपेन्मन्त्रं सा दुर्गा स सदाशिवः। भवत्येव न सन्देहो मम वक्त्राद्विनिर्गतम्। येन दत्तं मयि स्तोत्रं स एव मद्गुरुः स्मृतः। तस्यैव यदि भक्तिः स्यात् स सर्वजगदीश्वरः। नमोऽस्तु स्तवराजाय नमः स्तवप्रकाशिने। यत्रास्ते स्तवराजोऽयं तत्रास्ते श्रीसदाशिवः। इति शक्तिकागमसर्वस्वे हरपार्वतीसंवादे श्रीयोनिस्तवराजः समाप्तः॥

अथ योनिकवचम्॥ देव्युवाच॥ भगवन्! श्रोतुमिच्छामि कवचं परमाद्भुतम्। इदानीं देवदेवेश! कवचं सर्वसिद्धिदम्॥ महादेव उवाच॥ शृणु पार्वति! वक्ष्यामि अतिगुह्यतमं प्रिये!। यस्मै कस्मै न दातव्यं दातव्यं निष्फलं भवेत्॥ अस्य श्रीयोनिकवचस्य गुप्तऋषिः कुलटाच्छन्दो राजविघ्नोत्पातविनाशे विनियोगः। क्लीं योनिर्मे सदा पातु स्वाहा विघ्नविनाशिनी। शत्रुनाशात्मिका योनिः सदा मां पातु सागरे। ब्रह्मात्मिका महायोनिः सर्वान् कामान् प्रयच्छतु। राजद्वारे महाघोरे क्लीं योनिः सर्वदावतु। क्रमात्मिका सदा देवी ... मम ... सर्वाङ्गं पातु मां नित्यं कामया ...

वेश्मनि। वेदात्मिका सदा योनिर्वेदरूपा सरस्वती। कीर्त्तिं श्रीकान्तिमारोग्यं पुत्रपौत्रादिकं तथा। रक्ष रक्ष महायोने! सर्वसिद्धिप्रदायिनि!। रजोयोगात्मिका योनिः सर्वत्र मां सदावतु। इति ते कथितं देवि! कवचं सर्वसिद्धिदम्। त्रिसन्ध्यं यः पठेन्नित्यं राजोपद्रवनाशकृत्। सभायां वाक्पतिश्चैव राजवेश्मनि राजवत्। सर्वत्र जयमाप्नोति कवचस्य जपेन हि। श्रीयोन्याः सङ्गमे देवि! पठेदेवमनन्यधीः। स एव सर्वसिद्धीशो नात्र कार्य्या विचारणा। मातृकाक्षरसम्पुटं कृत्वा यदि पठेन्नरः। भुञ्जते विपुलान् भोगान् दुर्गया सह मोदते। इति गुह्यतमं देवि! सर्वधर्मोत्तमोत्तमम्। भूर्जे वा ताड़िपत्रे वा लिखित्वा धारयेद् यदि। हरिचन्दनमिश्रेण रोचना कुङ्कुमेन च। शिखायामथवा कण्ठे शिवः सोऽपि न संशयः। शरत्काले महाष्टम्यां नवम्यां कुलसुन्दरि!। पूजाकाले पठेदेतत् जयी नित्यं न संशयः॥ इति शक्तिकागमसर्वस्वे हरगौरीसंवादे श्रीयोनिकवचं समाप्तम्॥

इति कवचं पठित्वा भस्मा भङ्गे षड़ङ्गन्यासं कृत्वा योनौ मातृकान्यासं योनिबीजन्यासञ्च कृत्वा तदनुज्ञां लब्ध्वा ताम्बूलादिकं दत्त्वा लिङ्गोपरि ऐं इति लिङ्गमन्त्रमष्टोत्तरशतं जप्त्वा इयं गौरी अहं शिव इति विभाव्य मातृमुखे पितृमुखं दत्त्वा मूलमुच्चार्य्य ओँ धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा। सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम्। इति मन्त्रं पठित्वा लिङ्गं योनौ प्रवेश्य निधुवनासक्तशिवशक्त्योरभेदं विभाव्य यत्नतः स्थिरमानसः सन् वर्णमालया अष्टोत्तरसहस्रं शतं वा प्रणवमूलान्ते। ओँ प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा। धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम्। स्वाहा इति मन्त्रेण शुक्रं त्यजेत्॥ एकदा ताड़ने देवि! एकदा यदि चरेत्।

योगेन देवेशि! यदि सिद्धिर्न जायते। तदैव कथयामि! मम वाक्यं वृथा भवेत्। गङ्गा काशी प्रयागादि पुष्करं नैमिषं तथा। बदरी च तथा रेवा उत्कलं गण्डकी तथा। सिन्धुः सरस्वती चैव पीठानि विविधानि च। सर्वं त्यक्त्वा महेशानि! स्त्रीसङ्गं यत्नतश्चरेत्। स्त्रीसङ्गे सिद्धिमाप्नोति मम वाक्यं न चान्यथा। यद्दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि!। सिन्धुरूपं महेशानि! तज्जलं नात्र संशयः। स्त्रीयेष्टदेवीभावेन भोजयेत्तां प्रयत्नतः॥ शक्तिञ्च कथये देवि! शृणुष्व सुरसुन्दरि!। नवोरस्कादूर्द्ध्वं या पञ्चविंशतिवार्षिकी। अप्रसूता विशेषेण पञ्चमेऽपि भवेत् प्रिये!। सुन्दरी तु विशेषेण प्रसूता वाप्रसूतिका। अवश्यं पञ्चमं कुर्य्यात् शक्तिमाले महेश्वरि!। पञ्चपञ्चीकृते देवि! यः कुर्य्यात् पूजनादिकम्। तदक्षयं लभेत् पुण्यं नात्र कार्य्या विचारणा। गुरुं सन्तोषयित्वा तत्पत्नीं तत्सुतां सताम्। नानाभक्ष्यवस्त्राद्यैस्तथा द्रव्यैश्च सुन्दरि!। पञ्चमार्थे च या शक्तिस्तस्यां कुर्य्याच्च पञ्चमम्। तस्यां स्तोत्रं प्रकुर्वीत विशेषेण शृणु प्रिये!। द्रव्यादिभूषणैश्चैव भक्ष्यभोज्यैर्विशेषतः। नानाभक्ष्यणवस्त्राद्यैस्तथैव चुम्बनादिभिः। स्नानार्थं देवतानाञ्च रहस्यं परमं मतम्। येन स्नाते सर्वे देवि! देवता सुप्रसीदति। रात्रौ पञ्चसमारेषु कृत्वा पञ्चमचारकम्। भगमध्ये तु यद्द्रव्यं तत्तद्ग्रहीयाच्च प्रयत्नतः। तत्कुण्डोद्भवं तोयं श्रेष्ठं देवि! वरानने!॥ लभते भाग्ययोगेन देवानामपि दुर्लभम्। तस्मिन् विविधद्रव्यं धिया ताम्रपात्रे विनिक्षिपेत्। तद्द्रव्यस्नानमात्रेण देवता सुप्रसीदति।

उत्तरतन्त्रे द्वितीयपटले। सर्वपीठमयी शक्तिः सर्वदेवस्वरूपिणी। सर्वमन्त्रमयी शक्तिश्चतुर्वर्गप्रदायिनी। शक्ति

मनुष्यबुद्धिन्तु यः करोति वरानने!। न तस्य मन्त्रसिद्धिः स्याद्विपरीतफलं लभेत्। शक्तिः सम्पूजनाद्देवि! सर्वदेवार्च्चनं प्रिये!। शक्ती यद्दीयते देवि! वस्त्रादिभूषणं प्रिये!। देव्यङ्गे दत्तमेतत्तु महासौख्यप्रदायकम्। देव्यै यद्यद्वरारोहे! दत्तं वस्त्रविभूषणम्। इहैव शतसंख्येन दीयते च तदा पुनः। पाने भ्रान्तिर्भवेद्‌ येन घृणा स्याद्रक्तरेतसोः। तमालोक्य वरारोहे! कुलीनः पशुतामियात्॥

पुरश्चरणरसोल्लासतन्त्रे चतुर्दशपटले॥ कलौ तु भारते वर्षे स्त्रीसङ्गं परमं पदम्। न धूपं चञ्चलापाङ्गि! न दीपं वरवर्णिनि!। नैवेद्यं चञ्चलापाङ्गि! तन्त्रोक्तं षोडशं प्रिये!। द्रव्यं नास्ति महेशानि! कथं सिद्धिर्भविष्यति। अतएव महेशानि! सदानन्दमयं यतः। पूजनं चञ्चलापाङ्गि! प्रियाङ्गेषु व्यवस्थितम्। सदानन्दमयी नारी स्वकीया परकीयका। यस्या अङ्गे महेशानि! सर्वतीर्थानि सन्ति वै। तां विहाय महेशानि! अन्यस्थाने जपेद्यदि। तस्य सर्वं हृतं देवि! उन्मत्तो भवति ध्रुवम्॥

निगमकल्पद्रुमे तृतीयपटले॥ सप्तलक्षा महाविद्याः कथितास्तव सुव्रत!। रोमकूपे वसन्त्येता मन्त्ररूपाः पृथक् पृथक्। यावन्ति सन्ति रोमाणि शरीरे प्राणवल्लभ!। तावदेवात्र देव्यस्तु सन्ति तस्यां कलेवरे। तिस्रः कोट्यस्तदर्द्धेन तीर्थानि जाह्नवीजले। जाह्नवी योनिमूले च सततं परिसंस्थिता। मूलस्थाने सदा मुक्तिः स्थापिता त्वं न संशयः। प्रकृतिश्च पुमांश्चैव परं ब्रह्म प्रकीर्त्तितम्॥ योनितन्त्रेऽपि॥ काली तारा योनिगर्त्ते कुन्तले छिन्नमस्तिका। बगलामुखी च मातङ्गी वसेद्योनिसमीपतः। त्रिकोणे त्रिपुरा देवी तन्मार्गे भैरवी स्वयम्। इ[illegible]न्दुरधरश्चरणोर्द्धे। पीठानि चञ्चलापाङ्गि!

कलौ गुह्यं भविष्यति। पञ्चाशत्पीठसंयुक्तं स्त्रीणामङ्गं शुभप्रदम्। तत्कथं मूढ़लोकस्य विहाय स्त्रीपदं महत्। अन्यपीठेषु तीर्थेषु मन्त्रन्तु प्रजपेत् प्रिये!॥ एतस्मिन् रूपे देवानां ह्यसिद्धिर्भवति पार्वति!। नारीत्यागं तदा कृत्वा अन्यपीठं व्रजेत् प्रिये!। सा स्त्री तु परमेशानि! साक्षान्मूर्त्तिर्न चान्यथा। नारीप्रसङ्गे चार्वङ्गि! सिद्धयोऽष्टौ भवन्ति हि॥ इति शक्तिप्रशंसा।

अथ प्रकारान्तर लताशाधनम्॥ उत्तरतन्त्रे प्रथमपटले॥ वल्लीमूले वरारोहे!। लेखन्यङ्गसमुत्थया। यो लिखेन्मन्त्रवर्णांश्च तस्य सिद्धो भवेन्मनुः। तस्य दर्शनमात्रेण मुक्ताः सन्ति च पापिनः॥ वल्लीमूले योनौ॥ अङ्गसमुत्थया शेफसा॥ शैलकन्या कलानाथे कलानाथसमन्विते। यद्द्रव्यं जायते देवि! तद्द्रव्यं मम दुर्लभम्। माहात्म्यं तस्य वक्तुं वै समर्थः सुरवन्दिते!। जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि। पुरश्चरणकर्मादि दुःसाध्यं परमेश्वरि!। अङ्कितमिदमेवात्र सुगोप्यं पद्मसन्निधौ॥ अपरन्तु द्वितीयपटले॥ शङ्करोपरि संस्थाप्य कलां कामशरार्दिताम्॥ यस्तु चिन्तयते भक्त्या स एव कल्पपादपः॥ शङ्करोपरि विपरीतरतौ॥ वल्लीमूलसमुद्भूतं पाद्यं कर्त्तुं सुनिश्चम्। समूलं कुन्तलाख्यं पतत्रीव स शोभितम्। स्वाहवं स्वस्त्रनेयुक्तं द्राक्षारससमन्वितम्। नवनीतं कलावातं कदलीनाथसम्भवम्। रम्भारम्भ शयोरास्यं आतवं परमं प्रिये!॥ एकान्ते सकलं कृत्वा मुक्तकेशो दिगम्बरः। चत्वरे वा श्मशाने वा बलिं दद्याद्वरानने!। स्त्रीरूपेण च वा देवी चण्डालि परमेश्वरी। एवं कर्त्तुं समर्थो यः स एव साधकः स्मृतम्। यामिनीतिमिरे भाव्ये सुखे शाटकपर्य्यङ्के। पायसे कामरूपे च कानने च सुरेश्वरि!। मुक्त-

मायाबीजं योनिमन्त्रं तेन तां परिपूजयेत्। स्वशक्त्या भगि- योगेन पूजयेद्विभवावधि। ततो योनौ शतं मन्त्रं जपेत् साधकसत्तमः। भगे लिङ्गं ततो दद्यादिष्टमूर्त्तिं विचिन्तयन् गाढ़ं निपीड़यित्वा तु स्वशक्त्या कुलभैरवः। घाते घाते ब्रह्म- हत्यायुतं हन्यात् सुधाकरः। कामभावप्रसङ्गेन यथा सन्तोषणं भवेत्। पुनः पुनः कारणादि मुखे दद्यात् सुसाधकः। वीर्य्यपातादिसमये जपेन्मन्त्रमुदारधीः। ततस्तु द्रव्यमादाय महादेव्यै निवेदयेत्। एवं कृत्वा महादेवि! जठरे न पुनर्भवेत्। सत्यं सत्यं महादेवि! ममैतद्योगमुत्तमम्। बहुना किमि- होक्तेन शृणु मत्प्राणवल्लभे!॥

बृहन्नीलतन्त्रे षष्ठपटले॥ अथवा कामरूपस्य दर्शनं यदि जायते। तदा भगादिदेवीनां पूजां तत्र विधीयते। यदि भाग्यवशेनैव कुलदृष्टिः प्रजायते। तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत्। भगिनीं भगजिह्वाञ्च भगास्यां भगमालि- नीम्। भगाङ्गाञ्च भगाचीञ्च भगवर्णां भगावहाम्। भग- स्तनीं भगनाभीं भगस्थं भगसर्पिणीम्। तत्र सम्पूज्य मत्प्राज्ञो- मौनवैशेषैव च। मनस्तत्र विधानेन स्वयमक्षोभितः सुधीः॥ निगमकल्पद्रुमे॥ योनिर्वा स्तनयुक्तं वा कान्तु वापशरोरुहम्। चामरं वा नितम्बं वा दर्शनं यदि जायते। तदा जपेन्मन्त्र- राजं नमस्कृत्य पुनः पुनः। तेनाप्यपि महादेवि! मुक्तिरस्ति करस्थिता। शक्त्याः पादोदकं यस्तु पिबेद्भक्तिपरायणः। उच्छिष्टं वापि भुञ्जीत तस्य सिद्धिरखण्डिता। मन्त्रस्य यदि विश्वासो जायते गिरिशङ्करि!। तदा वाक्यं मया प्रोक्तं नान्यथा चैव चाचरेत्। यात्राकाले योनितत्त्वमाघ्राय यदि गच्छति। कुम्भेन शिरसा हृत्वा तस्य शत्रुर्विनश्यति। सभायां [illegible] पूर्वाचार्यां तथैव च। [illegible] अथ

वीर्थं वृथा न हि। येन तेन प्रकारेण योनिपूजापराक्रमः। स याति परमं स्थानं देवैरपि सुदुर्लभम्। मृत्युत्पाते च ग्रामादौ तथैव राजवेश्मनि। महोपद्रवमुत्पाते यदि योनिं प्रपूजयेत्। तदा योनिर्महादेवी चोद्धरेत् सर्वसङ्कटात्। इतो-ऽधिकं न किञ्चित्तु विद्यते मम वाक्यतः। सत्यमेतन्न सन्देहो यथाहं तव वल्लभः। सर्वधर्मान् परित्यज्य योनिपूजारतो भवेत्। तदैव परमा प्रीतिर्लभ्या कैवल्यमाप्नुयात्। तोया-नाञ्च यथा गाङ्गं गव्यानाञ्च यथा घृतम्। तथा देवि! मैथुनं मे भवेत् प्रियतमं प्रिये! ॥ निगमकल्पद्रुमे ॥ ऊरुद्वयस्य कान्ताया ऊर्वोरुपरि संन्यसेत्। ग्रीवामाक्रम्य पाणिभ्यां स्तनद्वन्द्वं क्वचित् क्वचित्। चुम्बनं बहुधा वक्त्रे बन्धोऽयं कामसुन्दरः। योनौ लिङ्गं समादाय हस्तोपरि पदद्वयम्। केशानाक्रम्य पाणिभ्यां स्तनद्वन्द्वं करौ करौ। चुम्बनं सर्वगात्रेषु पिबेदोष्ठाधरं मुहुः। दृढ़घातेन च रमेत् बन्धोऽयं रतिपण्डितः। स्कन्धयोर्विन्यसेत् पादौ योनौ लिङ्गं तथा क्षिपेत्। शिरश्चाक्रम्य हस्ताभ्यां दृढाघातक्रमात् क्रमम्। चुम्बनं चक्षुर्वदने स्तनयोर्मर्दनं मुहुः। रमेत् स्वशक्तितः कामी बन्धोऽयं काममर्दनः। उरस्था-सनमास्थाय चोरस्यपरमूरुकाम्। स्कन्धावाक्रम्य पाणिभ्यां गण्डे चुम्बनपूर्वकम्। रमेत् सुदृढ़घातैर्बन्धोऽयं कामकौतुकः। एवं क्रमेण देवेशि! बहुबन्धोऽस्ति भैरवि!। कामशास्त्रादितन्त्रेषु निशेषेण प्रकाशितम्। विशेषबन्धं सङ्क्षेपात् प्रसङ्गात्त्वयि चोदितम् ॥

अथ षोड़शबन्धाः॥ रतिरहस्ये॥ बन्धाश्चतुरशीतिः कुसुमेनिना परिकीर्त्तिताः। तस्मादाकृष्य लिखिताः षोड़श-बन्धकाः। पादौ स्कन्धयुगे नार्याः क्षिप्रा लिङ्गं भगे न्यसेत्। कामयेत् कामुको नारीं बन्धः काकपदो हि सः॥ पादमेकं

पक्कस्य रसेन कटुतैलकम् । लवणं वारनालञ्च भौमवारे प्रदा-
पतः । चक्षुःस्फुटे महेशानि ! पटलं याति संक्षयम् ॥ १० ॥
अजश्चोग्रमांसञ्च महिषस्य तथैव च । गोधामांसञ्च तन्मज्जा
भौमवारे तथा निशि । खादिराग्नौ पचेद्देवि ! चक्षाद्यावरग्ध-
भाजनम् ॥ ११ ॥ कार्पासकोमलफलत्रयं स्नात्वा समाहरेत् ।
चर्वित्वा चक्षुषोर्देवि ! पूरणाच्च विनश्यति ॥ १२ ॥ चक्षुरोगे
न सन्देहास्तिमिरस्य तथा शृणु । रक्तचन्दनसंयोगान्मधुना सह
रौद्रके । कियद्दुग्धमञ्जनाच्च तिमिरं हन्ति सुन्दरि ! ॥ १३ ॥
मधुयुक्ते वटफले घृष्टे चक्षुषि लेपनात् । तथा रोगं हरेदाशु
तथैव च पुनर्नवाम् ॥ १४ ॥ घृतेन भर्जितां भक्षेत् चक्षुस्तेज-
स्करं महत् ॥१५॥ निम्बनिर्यासपत्रं वा तैलेन सह भक्षणात् ।
चक्षुस्तेजस्करं देवि ! पामरीमूलदण्डकम् । नारिकेलोदकस्यैव
तथा रोगं हरत्यपि ॥ १६ ॥ त्रिफला गुडसंयुक्ता गुडमार्द्रक-
संयुतम् । द्वाभ्यां प्रभाते देवेशि ! भक्षणात् कामलनाशनम् ॥१७॥
धात्रीं तप्तोदकैर्भक्षेत् तथा रोगो विनश्यति । [illegible]
मज्जा तथा वासन्तिकालया । [illegible] किञ्चिदुष्णेन
भावयेत् । त्रिवारं लेपनादेव सर्वां हन्ति विचर्चिकाम् ॥१८॥
पलदलस्य त्वचा शुष्कं दग्धं सर्षपतैलके । एरण्डतैलेर्वा
देवेशि ! उष्णेन परिलेपनात् । एतद्विचर्चिकां हन्ति ताल-
मूलो तथैव च ॥ १९ ॥ वनमरीचवीजेन तक्रःपक्के विमि-
श्रितः । [illegible] लेपात् सर्वविचर्चिकाम् । हन्ति
देवि ! न सन्देहस्[illegible] ॥ २० ॥ मानं शुष्कं
ततो दग्ध्वा [illegible] लेपयेत् । [illegible]
[illegible] ॥ २१ ॥ मानं शुष्कं पुराणञ्च घृतेन सह भक्षणात् ।
[illegible] ॥ २२ ॥ त्रिफलायं [illegible]-
॥ [illegible]

वातहरं परम् ॥ २३ ॥ मधुसैन्धवसंयुक्तं कोलमज्जसमन्वितम्। पक्कमां मूलकं पक्का प्राशुकेन वरानने!। वातघ्नं परमं देवि! तापघ्नं नात्र संशयः ॥ २४ ॥ सर्ववाते मर्दनञ्च तिलतैलेन पार्वति!। तथा क्रौञ्चस्य तैलेन नागतैलेन वा प्रिये!॥ २५ ॥ शुष्कतैलेन दुग्धेन अजाक्षीरेण भावयेत्। औषधं वातिकं हन्ति कटिवातं तथैव च ॥ २६ ॥ उन्मत्तं कुष्मकृष्ण विशाढकौमपक्वकम्। जम्बूलमटसारञ्च वासकं रामवासकम्। योगपत्रं समीरञ्च मृदःकुम्भे विनिःक्षिपेत् ॥ पक्वाग्नौ तापयेद्देवि! पुनः पिण्डन्तु कारयेत्। अर्कमूलं पुनर्द्रव्यं च हौमूलसमन्वितम्। स्वेदयेत् सर्ववातेषु स्विन्नेन विनश्यति ॥ २७ ॥ तुलसीमूलबीजानि कुमारीबीजमेव च। प्रलेपात् सर्वकुष्ठघ्नं जलसारञ्च नश्यति ॥ २८ ॥ हस्तिकर्णं तुलायाञ्च समुकृत्य वरानने!। कुष्ठीमूलं बिल्वमूलं समरीचं सशर्करम्। तोलं तोलञ्च समाहाक् मक्षवातविनाशनम् ॥ २९ ॥ कलिञ्चत्वचं देवि! मले कहा विशेषतः। शोकघ्न नाशनं प्रोक्तं शामरोगुल्मकं तथा ॥ ३० ॥ तिन्तिड़ीबीजकं पिष्ट्वा तक्रेण सहयोगतः। पानाच्छोकं हरत्याशु वस्तवासस्य बीजकम् ॥ ३१ ॥ दन्तमांसं हरेदाशु वासकबीजकैस्तथा। पक्कवार्ताकुला स्वेदात् करोवाग्नौ तथा हरेत् ॥३२॥ श्वेतापराजितामूलं तथा वासकेन च। मुखमध्ये प्रलेपाच्च आध्यं नाशयति ध्रुवम् ॥ ३३ ॥ श्वेतगुञ्जां समुत्पाद्य नवकं पुष्पकं तथा। प्रलेपात्तत्क्षणाद्देवि! विषरोगो विनश्यति ॥३४ नीलकण्ठं मधुयुतं तथा रोगविनाशनम् ॥ ३५ ॥ श्वेतापराजितामूलं तथा श्वेतजयन्तिकाम्। श्वेतांचवकमेतेन कारयेद्गुलिकां ततः। स्नात्वा चन्द्रोदये देवि! समुत्पाद्य विधानतः। भाले च तिलकं कृत्वा वशीकरणमुत्तमम् ॥ ३६ ॥

अथ वक्ष्ये महेशानि! तुरगाणां चिकित्सितम्। वान्ते दद्यात् पललतां शृङ्गवेरं सपिप्पलीम्। यमानीं नारिकेलञ्च मुखवासकमूलकम्। कोषलञ्च गुडश्चैव पिण्डं तापहरं परम्॥

जीरं सर्जरसं कोलं दूर्वाधन्याकसंयुतम्। योगपत्रं गिमाशाकं मरीचं लवणान्वितम्। वासकीमूलसहितं ... श्रमापहम्। बृहत्पानीयमूलपत्रं कङ्कस्य बीजपत्रकम्। शृङ्गवेरं यवश्चैव हरिद्राद्वयमेव च। एतत्पिण्डं वातहरं बलपुष्टिकरं परम्। अरण्यबदरीं शुक्तिं कानने रामवासकम्। खर्जूरस्य च बीजेन सगुड़ेन ज्वरं हरेत्। धान्यमूलं रविमूलं कालक्षारसमन्वितम्। सोमधान्येन तद्दद्याच्छर्दिकारोगनाशनम्॥ तथा॥ अपामार्गं विड़ङ्गञ्च सैन्धवं नागकेशरम्। सैन्धवेन समायुक्तं चर्मरोगो विनश्यति। चर्च्चिकायान्तु भेकस्य तैलं भेरण्डकस्य च। निशायोगेन दातव्यं सर्वकुष्ठविनाशनम्॥ नागेश्वरस्य तैलेन मधुवृक्षस्य चूर्णितम्। दग्धं कृत्वा ददेल्लेपं महादेवि! विचर्च्चिका॥

षड्विंशति पटले॥ दानकस्य च पुष्पाणि घृतसिक्तानि भक्षयेत्। रक्तसार्कं ... अपस्मारश्च नश्यति॥ उत्तराभिमुखो भूत्वा कन्यासूत्रेण वेष्टयेत्। ... अपामार्गं तथा जीरमरीचकम्। एकैकेन पिबेत् प्रोत्वा सुखं सुवेत गर्भिणी। माहीषनवनीतेन तथा कपिकलाचतम्। ... ताभ्यां देवेशि! लिङ्गं स्थूलं भवेद्ध्रुवम्। रक्तभेरण्डमूलञ्च तथा ...दलपत्रकम्। मरीचञ्च प्रियङ्गुञ्च पिष्ट्वा लिङ्गं विवर्द्धयेत्॥

गुवाकपुष्पमेकन्तु ... पिबेत्॥ स्नात्वा वा जन्मदिवसे ... पुष्पिता भवेत्॥ ... मूलं ...विहस्य नासिकाम्। ... भवेदिन्द्रियः प्रभवो भवेत्॥

नागार्जुनकृतकक्षपुटे द्वितीयपटले॥ मूलारवटमूलञ्च जलेन सह घर्षयेत्। विभूत्या संयुतं देवि! तिलकं लोकवश्य-कृत्॥ १॥ पुष्ये पुनर्नवामूलं रुदन्तीं मूलिकां तथा। शव-मूलं तथा बध्वा कण्ठे सप्ताभिमन्त्रितम्। पूज्यो भवति सर्वत्र मन्त्रमत्रैव कथ्यते॥ ऐं पुरं चोभय भगवति गम्भीरे ब्लौं स्वाहा। अमुं मन्त्रमयुतद्वयं जपेत् ततः सिद्धिः॥ १॥ उत्पलपत्रमञ्जिष्ठा कुङ्कुमं तगरं समम्। स्नाने पाने तथा सर्वं दर्शं वश्यं भवत्यलम्॥ २॥ सिंहीमूलं हरेत् पुष्ये कन्यां वश्या अगप्रिय:॥ ३॥ निशि कृष्णचतुर्दश्यां महानीलीं श्मशानतः। उद्धृत्य नरतैलेन चाञ्जनेनैव वश्यकृत्॥ ४॥ तन्मूलं वन्धयेद्धस्ते सर्वलोकप्रियो भवेत्॥ ५॥ चन्द्रे पुष्ये समुद्धृत्य ब्रह्मदण्डीय-मूलकम्। भोजने सर्वसत्त्वानां वशीकरणमुत्तमम्। उलूक-हृदयं तुल्यं कुमार्य्या रोचनं सुधीः। अञ्जने रोचने वश्य-मानयेद्भुवनत्रयम्॥ ६॥ ओं नमो यक्षिणि अमुकं वश-मानय स्वाहा ओं। अस्य मन्त्रस्य पूर्वमेवायुतं जप्त्वा तत उत्पलपत्रादि सर्वप्रयोगाः। शतवारमभिमन्त्रिता सिद्धा भवति चौषधिः। सर्वेषामेव मन्त्राणां मन्त्रध्यानं पृथक् पृथक्। तत्तत्स्थाने यथासङ्ख्यमनुक्ते त्वयुतं जपेत्। कृष्णगौर्य्यां तु अश्लेषायां कुरुवककपीरकम्। नवाङ्कुलं कीलकं तत् सप्तवाराभि-मन्त्रितम्। यस्य नाम्ना खनेद्भूमौ स वश्यो भवति ध्रुवम्। क्लीं हुं हुं स्वाहा। शतमष्टोत्तरं जप्त्वा पूर्वमेवास्यभेदकः॥ ७॥

तृतीय पटले॥ कुङ्कुमं चन्दनञ्चैव रोचनं शशिमिश्रितम्। गवां क्षीरेण तिलकं राजवश्यकरं परम्। क्लीं क्लीं सः अमुकं वशं कुरु कुरु स्वाहा। पूर्वमेव सहस्रं जप्त्वा ततोऽनेन मन्त्रेण पूर्ववत् तिलकं कुर्य्यात्। ओं ह्रीं रक्तचामुण्डे कुरु कुरु अमुकं वशमानय स्वाहा। इति चामुण्डामन्त्रैः सर्वसिद्धो

भवति ॥ मञ्जिष्ठा कुङ्कुमञ्चैव बाला मोदा कुमारिका चिताभस्म खरत्नञ्च नियमेनैव भावयेत् । पुष्येण गुटिं कृत्वा भक्ष्ये पाने च दापयेत् । दृष्टो वा राजवश्यः चण्डमन्त्रप्रभावतः ॥ ८ ॥

अथ विवादजयः ॥ मोजिह्वा शिखिचूला वा शिरसि संस्थिता । कुरुते सर्ववादेषु जयं पुष्ये समुद्धृता । मार्गशीर्षे तु पूर्णायां शिखिमूलं समुद्धरेत् । बाहौ शिरे शिखे धार्य्यं विवादे विजयो भवेत् । बध्ननान्मुच्यते जन्तुः शिखामन्त्राच्च संशयः ॥ २ ॥ मेघनादस्य मूलस्य चक्रस्यान्तरवेष्टितम् । परदारो भवेन्मूकोऽथवा याति दिगन्तरम् । निशि कृष्णचतुर्दश्यां महानीलीं श्मशानतः । आदाय बध्नीयाद्धस्ते विवादे विजयो भवेत् । श्वेतगुञ्जान्वितं मूलं मुखस्थं दुष्टतुण्डजित् । उक्तयोगानां चण्डमन्त्रेण सिद्धिः ॥ मन्त्रस्तु ओं सुदर्शनाय हुं फट् स्वाहा । पूर्वमेवायुतं जप्त्वा चण्डमन्त्रस्य सिद्धये । ततो ह्योषधियोगश्च सदाभिमन्त्रितो भवेत् ॥ ४ ॥ अङ्गारपञ्चयुते पुष्ये गुञ्जामूलं समुद्धरेत् । बद्धं शिरसि तत्सर्वं चौरबाधाहरं परम् ॥

योगसारे प्रथमपरिच्छेदे ॥ देवीवाक्यम् ॥ व्याधिनाशमहं वक्ष्ये पलमात्रं घृतं पिबेत् । पठित्वानेन मनुना यः पिबेत् साधकोत्तमः । सर्वव्याधिविनिर्मुक्तो भवत्येव न संशयः । मन्त्रं तस्य प्रवक्ष्यामि शृणु भैरवोत्तम ! । तारं माया भृगुः मन्युः पुनश्च गुरुदाहृतः ॥ सृष्टियुक्तो गुरुश्चैव तथा चन्द्रः शिवः स्मृतः । एतन्मन्त्रं समाख्यातं घृतशुद्धिरितीरितम् ॥१॥

तृष्णानाशं प्रवक्ष्यामि रक्तचन्दनतोलकम् । घर्षयित्वा वामहस्ते गृहीत्वा साधकोत्तमः । तोलकं जलसंमिश्रं मनुनाष्टोत्तरं शतम् । तत्तदुपरि संजप्य यः पिबेत् साधकोत्तमः ।

समोहाज्जायते तस्य तृष्णानाशस्तु भैरव!। सर्वेषां भक्षणं प्रोक्तं समाहृत्य कुलेश्वर!। सर्वमष्टोत्तरशतं पिबेज्जप्त्वा च साधकः। शब्दबीजद्वयं भद्रे! नाशयद्वितयं वदेत्। तृष्णेति पदमुच्चार्य्य ततः स्वाहा मनुर्मतः। अनेन मनुना देव! तृष्णा-नाशोऽभिजायते॥ २॥ आहारनाशनार्थाय क्षणाचिवां समा-हरेत्। तोलार्द्धं वा तदर्द्धं वा तदर्द्धं वा सुरेश्वर!। आनीय मनुनानेन वटिकां कारयेद्बुधः। घृतेनालोड्य देवेश! मनु-नानेन भक्षयेत्॥ कामबीजं समुच्चार्य्य क्षुधाग्निनि पदं ततः। निवारयपदं चोक्त्वा स्वाहेति च मनुर्मतः॥ ३॥ अथवान्य-प्रकारेण क्षुन्निवृत्तिर्विधीयते। हविष्याशी भवेदादौ पश्चा-ज्जपति मातृकाम्। पश्चाद्घृतं प्रयोक्तव्यं मनुनानेन शङ्कर!। हसौर्वा येन मनुना भक्षयेत् साधकोत्तमः॥४॥ अथवा सर्पिषा देव जिह्वामालोड्य यत्नतः। यावदोष्ठं परिश्याम जिह्वया कुलभैरवः!। तावत्प्रमार्जयेज्जिह्वां यावदोष्ठसमां नयेत्। अने-नैव प्रकारेण क्षुन्निवृत्तिर्भविष्यति॥ ५॥ अथवान्यप्रकारेण क्षुन्निवृत्तिर्विधीयते। प्रत्यहं विजयाधूमं ब्रह्मरन्ध्रेण मन्त्र-वित्। पानं करोति देवेश! क्षुन्नाशो जायते ध्रुवम्। ब्रह्म-मन्त्रमहं वक्ष्ये येन क्षुन्नाशनं भवेत्। सम्वर्त्तकचन्द्रवह्नि भौतिको विन्दुसंयुतः। एवं बीजत्रयं देव!। समुच्चार्य्य कुले-श्वर!। अनेन मनुना देव! विजयाधूमशोधनम्। शोधयित्वा पिबेद्धूमं न दोषो जायते हर!॥ ६॥ अथ मूत्रप्रनाशार्थं वक्ष्यामि मन्त्रमुत्तमम्। अश्वगन्धां समानीय अस्त्रमन्त्रेण मन्त्रयेत्। तोलकं सर्पिषा देव! मिश्रयित्वा पिबेत् सुधीः। लिङ्गमूले कामबीजं जप्त्वा च स्तम्भयेद्धिया। द्वात्रिंशत्तोलकं दुग्धं मरीचं तोलकत्रयम्। सम्मिश्र्य प्रपचेद्यावद्यावत् शुष्कं समानयेत्। ततो वै वाग्भवं जप्त्वा भक्षयेत् साधकोत्तमः॥

अनेनैव विधानेन मूत्रनाशोऽभिजायते ॥ ७ ॥ पुरीषनाश-नार्थाय विड़ङ्गं तोलकद्वयम् । पिप्पलीतोलकं शाण्ठं शुण्ठीञ्च तोलकत्रयाम् । तेजपत्रस्य चारेण मिश्रयित्वा जपेन्मनुम् ॥ शतमष्टोत्तरं जप्त्वा मिश्रयेद्बहु यत्नतः । मन्त्रं तस्य प्रवक्ष्यामि शृणुष्वानन्दभैरव ! । श्रीर्माया वाग्भवञ्चैव शक्तिवीजत्रयं तथा । शिववायुजलं पृथ्वी वह्निजाया ततः परम् । मन्त्रयित्वा पिबेद्द्रव्यं पुरीषं नाशयेद् ध्रुवम् ॥ ८ ॥ शुक्रस्तम्भं प्रवक्ष्यामि शृणु भद्रे रवोत्तम ! । पिष्ट्वा चैरण्डकं मूलं नाभिमूले विलेपयेत् । रोहितमत्स्यपित्तेन तन्मूलं लेपयेच्छिव ! । अष्टवीजैर्मन्त्रयित्वा स्तम्भयेत् शुक्रशोणितम् । अष्टवीजं समुद्धृत्य मर्दयेदनुसरन् । स्तम्भयेत्स्थितं शुक्रं तथोक्तं कुलसुन्दर ! । मन्त्रेणानेन शुक्रस्य स्तम्भनं कारयेद् ध्रुवः ॥ ९ ॥ शुक्रस्तम्भनकं प्रोक्तमालस्यनाशनं शृणु । [illegible] कर्त्तालवयं (?) द्वयम् । कृत्वा वेतालमूलञ्च पिष्ट्वा यो भक्षयेत् सुधीः । षट्कारैर्मन्त्रयित्वा च तालमूलं पिबेत् सुधीः । ततो मद्यं पिबेद्धीमानालस्यनाशनं भवेत् ॥ १० ॥ निद्रानाशं प्रवक्ष्यामि शृणुष्वानन्दभैरव ! । चन्दनकं तोलकार्द्धं तोलार्द्धं कटुतैलकम् । एतद्धूपं मिश्रयित्वा मनुना मन्त्रयेत् सुधीः । मनुं तस्य प्रवक्ष्यामि येन निद्राक्षयो भवेत् । निद्रा यमसमा देव ! निद्रा व्याधिकरी मता । निद्रायां सर्वदोषः स्यान्निद्रया ज्ञाननाशनम् । निद्रया क्षीयते सर्वं निद्रया नरकं व्रजेत् । तस्माद्यत्नेन कर्त्तव्यं निद्रानाशनं भैरव ! । [illegible] वह्निसंयुक्तं चन्द्रबिन्दुसमन्वितम् । क्रमात्त्रयं समुद्धृत्य वह्निजायां परे वदेत् । शतमष्टोत्तरं जप्त्वा मर्दयेत्तद्यत्नतः । मन्त्रं [illegible] निद्रानाश [illegible] ॥ ततो [illegible] चतुर्यो- [illegible] भागयोः । ततो ध्यायेत् कुलगुरुं कुलदेवीं प्रयत्नतः ।

येद्भुयत्नेन निद्राया नाशनं द्रुतम् । ओं निद्रे देवि ! मायि ! जगन्निर्वाणकारिणि ! । मां जहि त्वं जगद्धात्रि ! म। जहि परमेश्वरि ! । प्रणवं पूर्वमुच्चार्य्य निद्रापतिपदं ततः । निद्रापतिपदं ब्रूयात् ततो ब्रूयात् सनातनी । वह्निजायां ततो ब्रूयात् निद्राक्षयमनुर्मतः । एतन्मन्त्रजपादेव निद्रानाशो भवेद् ध्रुवम् । शतमष्टोत्तरं वापि सहस्रं वा कुलेश्वर ! । जप्त्वा निद्रा क्षयं याति किमन्यत् कथयामि ते । अत्र ध्वित- स्त्वध्याहाराज्जसेत्यनेनैककर्त्तृकता ॥ ११ ॥ अथान्यत् सम्प्र- वक्ष्यामि चेन्द्रियाणाञ्च निग्रहम् । योनितन्त्रोक्तमार्गेण कुला- चारं करोति हि ॥ कान्तां मनोरमां देव ! आनीय त्नुयत्नतः । पूजयित्तेन मार्गेण कामयेद्धुयत्नतः ॥ एवं सत्कारयोगेन शुक्र- स्तम्भो भवेन्नृणाम् ॥ यस्य यद्देवताभावो यद्रूपा स्वता ख्याता । तत्तद्रूपजगत्सर्वं ध्यात्वा च मदिरां पिबेत् । तः प्राणायाम- योगे वायुञ्चापि वशं नयेत् । ततो घृतं स...ोध्य नालमूलं यं, च ! । पिष्ट्वा पूर्वोक्तमनुना जप्त्वा साधकः पिबेत् । तथा शि... निर्मुक्तो नरो भवति तत्क्षणं ॥ गुरुपादरजो सर्वव्याधिविमांससमन्वितम् । सुराय महादेव ! मदंये- ध्यात्वा मधु ततः पूर्वोक्तमन्त्रेण सप्ताष्टदिनं पिबेत् । एवं द्धुयत्नतः न क्षुधानाशो भवेद् ध्रु... ॥ २ ॥ कुलेश्वरीं ततो संस्कारयोगेणाचितां ततः पिबेत् । ...ः पिबेन्मधुमांसं घृतं वा ध्यात्वा का... । एवं संस्कारयोगेन्...नाशो जायते ध्रुवम् ॥

...तभैरव ...न्तामणिनिर्म्मिता ...तता सर्व्वैर्गुणैरन्विता ।
वाक्...ल्पलताश्रितार्थ...ता विश्वोपकारे हिता ॥
साध्...वा विप्रसभाजित ...पालिता श्रीप्राणतोषिण्यसौ
व्याख्या भवता सता ...मता शुभ्रातिशुभ्रा लता ॥
द्रष्ट... इति ...णतोषिणी समाप्ता ।



